


SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:11, Issue: 04
July 2024, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका
जूलै - २०२४ रू. २०/-

## तिरुमल
## श्रीस्वामिनः आणिवर आस्थानम्

16-07-2024



13.06.2024 दिनाङ्के तिरुमल श्री स्वामिनः दर्शनार्थम् आगत सन्दर्भे आन्ध्रप्रदेश राज्य मुख्यमन्त्रिवर्यः मान्य नाराचन्द्रबाबु नायुडु महोदयः अपिच मन्त्रिवर्ग सहचरः नारा लोकेश्, मानव संसाधन एवं विकासः तथा आई.टी. तथा आर्.टी.जी. मन्त्रिवर्यः अन्ये शासन सदस्याः, अन्ये अधिकारिणः वेदाशीर्वचनं, तीर्थप्रसाद वितरणं अपिच ज्ञापिकां प्रदत्तवन्तः सहायक कार्यनिर्वहणाधिकारी वी. वीरब्रह्मम् ऐ.ए.एस्., श्रीमति यम्.गौतमी, ऐ.ए.एस्. ।



# गीतामृतम्

श्रीभगवानुवाच -

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्त्रियस्य न विद्यते।।

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।

सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम्।।

(भगवद्गीता २.३१-३२)

श्रीभगवान् उवाच। हे अर्जुन!

भावः - स्वीयं धर्ममपि सम्यक् आलोच्यापि दुःखं प्राप्तुं न युक्तम्। क्षत्त्रियस्य युद्धं धर्मप्राप्तम् एव भवति। क्षत्रियस्य धर्मसम्मतात् युद्धात् अन्यत् श्रेयः नास्ति। धर्मसम्मतम् एतादृशं युद्धं स्वर्गप्राप्तिहेतुः भवति। यदृच्छया लब्धः भवति। ते क्षत्त्रियाः सुखिनः भवन्ति।

## सङ्कीर्तनम्

रागः - बेहाग्।

ताळम् - आदिताळम्।



नारायण ते नमो नमो
नारदसन्नुत नमो नमो।।प।।

मुरहर भवहर मुकुन्द माधव
गरुडगमन पङ्कजनाभ।
परमपुरुष भवबन्धविमोचन
नरमृगशरीर नमो नमो।।च।।
जलधिशयन रविचन्द्रविलोचन
जलरुहभवनुतचरणयुग।
बलिबन्धन गोपवधूवल्लभ
नलिनोदर ते नमो नमो।।च।।
आदिदेव सकलागमपूजित
यादवकुलमोहनरूप
वेदोद्धर श्रीवेङ्कटनायक
नादप्रिय ते नमो नमो।।च।।

(अन्नमाचार्यसङ्कीर्तनम्)

## तिरुपतिस्थ श्रीकपिलेश्वरस्वामिनः पवित्रोत्सवः
### १७-०७-२०२४ तः २०.०७.२०२४ पर्यन्तम्

| दिनाङ्क | वासरः | उत्सवाः | |
|---|---|---|---|
| १७.०७.२०२४ | सौम्यवासरः | – | अङ्कुरार्पणम् |
| १८.०७.२०२४ | बृहस्पतिवासरः | पञ्चमूर्तीनां स्नपन तिरुमञ्जनं | पवित्र मन्डलपूजा, होमाः |
| १९.०७.२०२४ | भृगुवासरः | ग्रन्धी पवित्र समर्पण ब्रताचारी | पवित्र प्रतिष्ठा व्रताचारी |
| २०.०७.२०२४ | मन्दवासरः | पवित्र समर्पण पवित्रोत्सव समाप्तिः | पञ्चमूर्तीनां वीधि उत्सवः |



# जूलै -२०२४

सम्पुटिः-११ सञ्चिका-०४

श्रीक्रोधिसंवत्सरस्य ज्येष्ठकृष्णदशमी ततः
आषाढकृष्ण एकादशी पर्यन्तम्-१९४४



मुखचित्रम् - तिरुमल, श्रीस्वामिनः आणिवर आस्थान महोत्सवः (17.07.24)।

अन्तिमरक्षापुटः - व्यासपूर्णिमा(21.07.24)।

## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.

दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९
सम्पादकः,
०८७७ - २२६४३६०

सूचनानाम्, आक्षेपाणां च कृते
सम्पर्क कुर्वन्तु -

sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका




गौरवसम्पादकः-

श्री जे.श्यामला राव, I.A.S.,

कार्यनिर्वहणाधिकारी

ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः

डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः -

डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,

प्रत्येकाधिकारी,

ति.ति.दे.मुद्रणालयः,

तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः,

छायाचित्रग्राहकः, ति.ति.दे.

श्री बि.वेङ्कटरमणः,

सहायक-छायाचित्रग्राहकः, ति.ति.दे.

सम्पादकीयम्

# गुरुप्राशस्त्यम्

नारायणसमारम्भां शङ्कराचार्यमध्यमां।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्।।

प्रपञ्चे भगवद्गीतोपदेशकर्ता श्रीमन्नारायणः एव आदिगुरुः। वेदोऽखिल धर्ममूलमित्युक्तत्वात् - वेदमन्त्रद्रष्टारः वेदधर्मप्रचारकाः सर्वेऽपि गुरवः एव। वेदकालादारभ्य अनेके ऋषयः व्यास वसिष्ठ वाल्मीक्यगस्त्यादयः जन्मराहित्याय उपनिषदादिग्रन्थद्वारा, दर्शनशास्त्रद्वारा, धर्मशास्त्रग्रन्थद्वारा अपारं विज्ञानं लोकोद्धरणाय दत्तवन्तः। एते सर्वेऽपि आध्यात्मिकगुरवः। प्रसिद्धाद्वैताद्वैत विशिष्टाद्वैतशङ्कर रामानुज मध्वाचार्याः हिन्दूमते गुरवः भवन्ति।

गुरु शब्दस्य बहवः अर्थास्सन्ति। आचार्यदेशिक शब्दौ गुरुवाचकावेव। प्राचीनसम्प्रदायमनुसृत्य वेदव्यासमेव गुरुरिति पूजयामः। सः वेदव्यासः विष्णुस्वरूपः एव। अतएवोक्तम् -

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः।।

मातृपित्रोरनन्तरं गुरोः ज्ञानप्रदानात् तृतीयं स्थानं दत्तम्। सर्वाध्यात्मिक लौकिकविद्याबोधनेन साकं विनयादि सद्गुण प्रदाता गुरुः एव। गुरुभक्त्या विना अधीतविद्या फलप्रदा न स्यात्। गुरुः त्रिमूर्ति स्वरूपः। अतएव

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।
गुरुसाक्षात्परं ब्रह्म तस्मै श्री गुरवे नमः।।

गुरुशब्दस्य बहवः अर्थास्सन्ति

अज्ञानान्धकारनाशकः मोक्षोपाय बोधकः एव गुरुरिति वदामः। गुरुः एव शिष्यसन्तापहारकः। गुरुगीतायां गुरवः अक्षराभ्यासादि लौकिकविद्याप्रदाता सूचकगुरुरिति, धर्माधर्मबोधकः वाचकगुरुरिति, पञ्चाक्षरीमन्त्रोपदेशकः बोधकगुरुरिति, मारणवश्यादि तुच्छमन्त्रोपदेशकः निषिद्धगुरुरिति, वैराग्य बोधकः कारणगुरुरिति, संशयपरिहर्ता, जन्म जरामरणभीतिनाशकः परमगुरुरिति सप्तधा गुरवः विभक्ताः। गुरुभक्त्या असाधारण दिव्याणिमाद्यष्ट विभूतिविद्याः अपि प्राप्तुं शक्यते। भगवान् श्रीकृष्णः अपि सान्दीपनिगुरुद्वारा सर्वविद्याः अधीतवान्। कौरवपाण्डवाः द्रोणाचार्यद्वारा शस्त्रास्त्रेत्यादि शास्त्रीय विद्याः सर्वाः प्राप्तवन्तः। सर्वेषां देवानां बृहस्पतिः, राक्षसानां शुक्राचार्यः गुरावास्ताम्।

अनादिकालात् भारतीयाः सम्प्रदायबद्धकतया गुरुपूजोत्सवं निर्वहन्ति। वेदव्यासः विज्ञानभाण्डागारः एव। सः वेदान् चतुर्धा विभज्य शिष्यद्वारा प्रचारयामास। अष्टादशपुराणानि, उपपुराणानि, ब्रह्मसूत्राणि, महाभारतेतिहास ग्रन्थश्च व्यरचीत्। महाभारतं पञ्चमवेदः इति वदन्ति। सर्वधर्माः अध्यात्मराजनीत्यादि विषयाः तस्मिन् महाभारते सन्ति। अर्जुनाय उपदिष्टा भगवद्गीता अस्मिन्नेव भीष्मपर्वणि वर्तते। अतएव व्यासं तस्य जन्मदिनं पुरस्कृत्य आषाढ पूर्णिमायां जगद्गुरुत्वेन तं पूजयामः। अतएव

अचतुर्वदनो ब्रह्मा द्विबाहुरपरोहरिः।
अफाललोचनश्शम्भुः भगवान् बादरायणः। इति तं स्तुवन्ति।

ॐज्ञानज्योतिप्रकाशकेभ्यो गुरुभ्यो नमः।।

# गुरुपूर्णिमा (व्यासपूर्णिमा)

- आचार्य जि. पद्मनाभम्
चरवाणी - ९२४७३२८२८६



आषाढशुद्धपूर्णिमायाः एव व्यासपूर्णिमेति नाम। व्यासपूर्णिमापर्वदिनं आदिशङ्कराचार्यैरेव आदौ प्रवर्तितम्।

**प्राचीन पूजाविधानम् -** भूमावङ्गवस्त्रे तण्डुलोपरि निम्बफलं निक्षिप्यते। शङ्करस्य शिष्यचतुष्टयं आगत्य तद्गृह्णातीति विश्वासः। पूजानन्तरं हस्तपरिमितं तत्तण्डुलं नीत्वा स्वगृहे तण्डुले मिश्रीकुर्वन्ति। तण्डुलं, नूतन वस्त्रं निम्बफलं च, शुभसन्दर्भेषु लक्ष्मीप्रसादार्थं हिन्दूगृहेषु पूजायां निक्षिप्यते। शृङ्गेयां शङ्करपीठादिषु व्यासपर्वदिनं नितान्तवैभवेय निर्वहन्तिस्मेति इयं प्राचीनगाथा।

गुरुपरे व्यासपर्वदिने लोके सर्वैरपि स्वगुरूनाराध्य गुरुभक्तिः प्रदर्शनीयेति शास्त्रवचनम्। गुरुपूजा विशेषप्रयोजनकारिणी। "यस्य देवे परा भक्तिः यथा देवे तथा गुराविति श्वेताश्वतरोरूपनिषद्वचनम्। "आचार्यदेवो भव" इत्युक्तत्वात् दैवमिव आचार्यः पूजनीयः। "दैवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन।" अतः गुरोरवज्ञायां अधीतविद्यापि न फलप्रदा स्यात्। बहुषु ऋषिषु सत्सु व्यासनाम्नैव पूजाविधानं व्यासः शङ्करावतारः इति हेतोरेवेति केषाञ्चिन्मतम्। मत्स्यगन्धिनामककालिक्याः पराशरादुत्पन्नः व्यासः

शङ्करं शङ्कराचार्यं गोविन्दं बादरायणम्।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः।।

गुरुपूजया ब्रह्मत्वमपि सिद्ध्यति। आषाढपूर्णिमायां दानेकृते विष्णुलोकप्राप्तिरपि स्यादिति विश्वासः। सकलकलानिधिः व्यासः। सोमकराक्षसेन वेदेषु अपहृतेषु ततः वेदेषु परस्परमिश्रितेषु विष्णुरेव व्यासावतारं कृत्वा राक्षसं हत्वा वेदानुद्धृत्य मिश्रितवेदान् सम्यक् चतुर्वेदात्मना विभागीचकारेति वदन्ति। व्यासो नारायणो हरिः।

व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम्।
पराशरात्मजं वन्दे, शुकतातं पोनिधिम्।।
अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः
अफाललोचनश्शम्भुः भगवान् बादरायणः।।
व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे।





**नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः।।**

सकलशास्त्रवेत्ता व्यासः शस्त्रचिकित्सावेत्ताप्यासीत्। गान्धार्याः शतं पुत्राः, एका पुत्रिका जनिष्यन्तीति व्यासः एव गान्धार्याः वरं ददौ । गान्धार्या ईर्ष्यया स्वयमेव गर्भस्थपिण्डे स्रस्तीकृते विच्छिन्नं पिण्डं परिरक्ष्य एकाधिकशतशिशुपिण्डानि स्वनैपुण्येन विभज्य घृतकुण्डे निक्षिप्य पूर्णशरीराकारप्राप्तिपर्यन्तं पोषणकार्यं व्यासश्चकारेति प्रामाणिकतया ज्ञायते। एवं वैद्यविद्यानिधेः, अपारमेधाविनः आत्मविद्यानिधेः व्यासस्य अवश्यं पूर्णरूपेण गुरुपूजाविधिः आचरणीयः।

**गुकारस्त्वन्धकारस्स्यात् रेफस्तस्य निवर्तकः।**
**अज्ञाननिवर्तकत्वात् गुरुरित्यभिधीयते।।**

इति गुरुशब्दनिर्वचनं वदन्ति।

व्यासस्य जन्म ई- पूर्वं ३००० त्रिसहस्रवर्षे - आषाढपूर्णिमातिथाविति चारित्रकशास्त्रमतम्। अत एव आषाढपूर्णिमातिथावेव भारतीयाः आदिगुरुं शङ्करावतारं व्यासं पूजयन्ति।

वेदव्यासमेव, यमुनातटद्वीपजन्मवत्वात् द्वैपायनः इति कृष्णवर्णत्वात् कृष्णः इति व्यवहरामः। वेदव्यासजन्मस्थाने



''कालपी''नाम व्यासमन्दिरं उत्तरप्रदेशस्थजालीन् मण्डले अद्यापि वर्तते। अयं बुद्धिबलात् बाल्यादेव सुदूरमपि वस्तु जानातिस्म। बाल्ये एव सर्ववेदशास्त्रेषु निष्णातोऽयं जननान्तरमेव तपःकर्तुमैच्छत्। मातुः सत्यवत्याः अनङ्गीकारेऽपि तां सान्त्वयित्वा ध्यानमात्रेण प्रत्यक्षीभविष्यामीति मातुः वाग्दानं कृत्वा पितृवत् तपोभूमिं बदरीवनं जगाम। अत एव बादरायणः इत्ययं व्यवह्रियते। पितृतपोबलात् अपारज्ञानी भूत्वा वासुदेवात्, सनकादिमहर्षिद्वारापि ज्ञानमवाप। अयं आरुणिनामक सहधर्मचारिणीद्वारा बालयोगिनं महाज्ञानिनं श्रीमद्भागवतप्रोक्तारं शुकमहर्षिं पुत्ररत्नमवाप।

द्वापरयुगस्थः ज्ञाननिधिर्व्यासः कलियुगे अल्पबुद्धीनुद्दिश्य वेदान् ऋग्यजुस्सामाथर्वणात्मना चतुर्धा, विभज्य तत्प्रचारार्थं शिष्यान् पैल-जैमिनी वैशम्पायन सुमन्त्रान् नियमितवान्। व्यासशिष्यद्वारा वेदानामनेकोपशाखाः निर्मिताः। व्यासः उपनिषत्सारतत्त्वज्ञानार्थं ब्रह्मसूत्राणि व्यरीरचत्। वेदज्ञानं सामान्यजनदुरवगाह्यमिति अष्टादशपुराणानि (ब्रह्म, पद्म, विष्णु, वायु, भागवत, नारद, मार्कण्डेय, अग्नि, भविष्य, ब्रह्मवैवर्त, लिङ्ग, वराह, स्कन्द, वामन, कूर्म, मत्स्य, गरुड, ब्रह्माण्डनामकानि एकैकं लक्षाधिक श्लोकपरिमितानि व्यरीरचत्।

एतेषु पुराणेषु भागवतानां धर्मपरायणानां व्रतोपवास विधि, तीर्थ माहात्म्यादीनि सरळभाषायां निबद्धानि। अयं पुराणज्ञानं शिष्याय रोमहर्षणाय ददौ। ''सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरतश्चैव पुराणं पञ्चलक्षणमिति पुराणलक्षणं वदन्ति।''

ततः वेदव्यासः दशसहस्राधिकलक्षश्लोकात्मकं कौरवपाण्डवकथासम्बन्धि महाभारतं प्रणिनाय। विश्वे सुदीर्घसाहित्यभरितः सरलभाषानिबद्धः अयं ग्रन्थः। सर्ववेद सारत्वात् पञ्चमवेदः इति परिगण्यते। अयं धार्मिकदार्शनिकपौराणिक, ऐतिहासिक महाकाव्यग्रन्थः।



# मे - २०२४

## लघुप्रश्नोत्तरी समाधानानि

१. कुरुवंशीयः
२. शन्तनः
३. वेला
४. (१६)
५. शुक्राचार्यः
६. (६)
७. श्री महा विष्णोः
८. अङ्गदः
९. विश्वामित्र
१०. श्रीकृष्णः
११. अभिमन्युः
१२. पृथा
१३. हस्तिनापुरी
१४. ययातिः
१५. अश्वत्थामः

व्यासमहर्षिः महाभारतग्रन्थकर्ता अपि च तत्र घटनानां प्रत्यक्षसाक्षी आसीत्। अलौकिक शक्तिसम्पन्नः दिव्यदृष्टिमानयं धृतराष्ट्रपाण्डुविदुराणां नियोगपद्धत्या जन्मदाताऽपि बभूव। अन्तर्द्वन्द्वसङ्कटपरिस्थितिषु माता सत्यवती व्यासमाहूय विचारविमर्शं करोतिस्म। महर्षिर्व्यासः विपत्तिषु पाण्डवानां समुचितं साहाय्यं करोति स्म। अयमेव महाभारतयुद्धघटनाः धृतराष्ट्राय वक्तुं सञ्जयाय दिव्यदृष्टिं ददौ। युद्धनिवारणाय धृतराष्ट्राय हितोपदेशं चकार। धर्मजस्य राजनीतिमुपिदिदेश। धृतराष्ट्राय, मृतपुत्रान् दर्शयामास। पाण्डवान् शप्तुं प्रवृत्तां गान्धारीं निवारयामास। त्रिकालज्ञः अयं युधिष्ठिरद्यूतकारणात् पाण्डवानां अरण्यवासाज्ञातवासान् महाभारतयुद्धे दुर्योधनपराजयञ्च पूर्वमेव विज्ञाता आसीत्।

महाभारतवक्तायं, लेखकः गणेशः अतः एव लिपिबद्धोऽयं ग्रन्थः। उत्तराखण्ड बदरीनाथपुण्यक्षेत्र समीपे कस्याश्चित् ग्रामगृहायां वर्षत्रयावधि महाकाव्यमिदं व्यासेन गणेशाय प्रोक्तम्। अद्यापि तस्यां गृहायां मन्दिरमपि निर्मितं दृश्यते? तत्र व्यासशुकदेव विष्णुमूर्तीनां प्रतिमाः, अन्धकार निवारणाय नित्यदीपकान्त्या सह प्रकाशन्ते। विश्वप्रसिद्ध भगवद्गीता महाभारते भीष्मपर्वणि सङ्कलिता। अस्मिन् सर्वदुःखसमभावत्वं, निष्कामकर्मत्वं भौतिक जीवननिस्सारत्वं, कर्म भक्ति ज्ञानमार्गैः मोक्षप्राप्तिमार्गं वयं जानीमः।

अतः मातृपितृपूजानन्तरं गुरुपूजा अवश्यं शुभप्रदा मोक्षगामिनी भवतीति महान्तः वदन्ति। अत एव

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।
गुरुस्साक्षात्परंब्रह्म तस्मै श्रीगुरवे नमः।। इत्युक्तम्।

धर्मग्रन्थानुसारं अष्टचिरञ्जीविषु व्यासोऽप्येकः।

अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः
कृपः परशुरामश्च सप्तैते चिरजीविनः।
सप्तैतान् संस्मरेन्नित्यं मार्कण्डेयमथाष्टकम्
जीवेद्वर्षशतं सोऽपि सर्वव्याधिविवर्जितः।।

### अद्यतनकाले गुरुपूजाविधानम् :-

प्रातः काले भक्तिश्रद्धाभ्यां नित्यनैमित्तिक कर्मानन्तरं शुभवस्त्रधारणेन शुचिर्भूत्वा पूजास्थलं पवित्रीकृत्य पूर्वदिशि वा उत्तरदिशि वा पूजामण्डपं निर्माय पीठे व्यासचित्रपटं संस्थाप्य गुरून् इष्टदेवताश्च आवाह्य गुरुपूजां संकल्प्य गुरुस्मरणं कुर्वन् "गुरुपरम्परा सिध्यर्थं व्यासपूजां करिष्ये इत्युक्त्वा कुङ्कुम, गन्ध, पुष्पाक्षतैः षोडशोपचारपूजां कृत्वा पुष्पमालालङ्कृतगुरुदेवाय फलमधुराहाराः समर्पणीयाः। कृतज्ञतापूर्वकं गुरुप्रार्थना एवं कर्तव्या-

ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिम्
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादि लक्ष्यम्।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि।।

(तदनन्तरम्)

"हे भगवान् रावणः वरगर्वात् लोकभीकरो जातः। मुनीन् सर्वान् अपि पीडयति। सर्वत्र वेदापचारः एव जायते। घोरपापानि आचरति। आर्षधर्मस्य ग्लानिः भवति। वयं रावणस्य अत्याचरं सोढुं न शक्नुमः। अवश्यं रावणः हन्तव्यः तदर्थं श्रीहरिः एव समर्थः। नारायण दर्शनार्थं वयं यदा वैकुण्ठं गतवन्तः तदा श्रीहरिः अस्मिन् समये मर्त्यलोके गिरौ अस्तीति। तं अच्युतं भूलोके न दृष्टवन्तः। इदानीं भवान एव समर्थोऽसि। कृपया मार्गदर्शनं कुरु महात्मन्।" इति प्रार्थितवन्तः। श्रुत्वा सर्वं लोकनाथः ब्रह्मा एवमुवाच "हे देवा! मुनयः! रावणः अजेयः। समानुसरं भगवान विष्णुः एव मानव रुपं धृत्वा तस्य संहारं करोति। वेङ्कटाद्रौ वसति। सः दयालुः शरणागतत्राणदीक्षाबद्धः। प्रथमं श्रीनगरं गच्छामः तत्र दक्षिणास्यां दिशि पद्माक्षः नारायण अस्ति तत्र अन्वेषणम् कुर्मः अहमपि आगच्छामि। परन्तु सः देवदेवः लीला विनोदी बहु दुर्लभं तस्य दर्शनं अतः अतीव जागरूकतया तस्य अन्वेषणम् कर्तव्यं। सः जगत्पतिः श्रीदेव्या सह घोर काननेषु गह्वरेषु स्वेच्छया विहरते। इदानीं भविष्यन्तं विशेषमेकं वदामि। आगामि काले अयोध्यापति दशरथः संतानार्थं स्वामि पुष्करिणी तीरे तपः आचरति। तस्य तपः प्रभावात् भगवान् विभुः अवश्यं दर्शनं ददाति वयंमपि तस्मिन् समये नारायणं




- ई.पार्थसारथिः
चरवाणी - ६३००६४९९६२

प्रार्थयामः। अस्माकं संकटं निवारयतु इति माधवं नुमः।" श्रुत्वा देवाः मुनयः सर्वेऽपि ब्रह्म देवं अनुसरन्तः वेङ्कटाद्रिं प्राप्तवन्तः। तत्रैव केशवस्य अनुग्रहार्थं सर्वे तपः आचरन्तः स्थिताः।

अयोध्यापति दशरथः संतार्थं कुलगुरुं वशिष्ठं प्रार्थितवान्। वशिष्ठो उवाच राजन् पुराकृतं दुष्कृतं अस्मिन् जन्मनि एवं पीडयति। चिन्ता मास्तु, श्रीवेङ्कटेश्वर स्वामिनं शरणं गच्छतु। स्वामि पुष्करिणी तीरे तपः आचर। अवश्यं तव संतानं भविष्यति। आलस्यं अमृतं विषं इति अर्योक्तिं अनुसृत्य तत्क्षणम् गत्वा श्रीपुष्करिणी तीरे तपः आचर। तस्य मर्गं अपि वदामि सावधानतया शृणु। गङ्गानद्या दक्षिणे सुवर्णमुखी नदी वर्तते। तस्याः उत्तरस्यां दिशि द्विशत योजन दूरे वेङ्कटगिरिः अस्ति। वेङ्कटगिरिः मनोहरः हृद पर्वतः। तत्रैव सर्वश्रेष्ठं देवादिभिरर्चितं तीर्थं वर्तते। किन्नराः तत्रैव नृत्यन्तः गायन्तः चरन्ति। तत पर्वतं दैवैः स्तूयमानं मुदान्वितं। नानाविध परिमळ पुष्पैः, रसान्वित फलैः समृद्धं वर्तते। सर्वालंकार युक्त चैत्र रथ इव पर्वतोयं राजते। मेरोः एव उन्नतः पर्वतः अस्यैव वेङ्कटगिरिः इति नाम। बहु दुर्लभं वेङ्कटपर्वतस्य दर्शनं अतः अतीव जागरूकतया तस्य अन्वेषणम् कर्तव्यं।"

श्रुत्वा विषयमेतत् सर्वं दशरथः गुरोः साकं गङ्गा नदीं प्राप्तवान्। गुरोः वचनं अनुसृत्य गङ्गा नद्यां संकल्प पूर्वकं स्नानं आचरितवान्। ततः प्रस्थानं कृतवान्। मार्गे तुङ्गभद्रा, मलापहारी, नर्मदा, कृष्णा, गोदावरी इत्यादि पुण्यनदीषु स्नानं कुर्वन् सः वेङ्कटगिरिं प्राप्तवान्। स्वामि पुष्करिणी तीरे मुनयः सर्वेऽपि तपः कुर्वन्तः सन्ति। तेभ्यः दशरथः नमस्कारं कृतवान्। श्रीपुष्करिण्याः जले स्नानं कृतवान्। तत्रैव अष्टाक्षरीमन्त्रबद्धान् सत्यलोकवासिनः दृष्टवान्। "अस्माकं गम्यं प्राप्तवन्तः। अत्रैव चतुरास्यः तपः आचरन् अस्तीत्यतः अवश्यं रमानाथ वाणीवल्लभस्य कृते दर्शनं ददाति अतः त्वमपि अत्रैव शुचिर्भूत्वा तपः कुरु" इति वशिष्ठ उवाच। इत्युक्त्वा दशरथस्य कृते अष्टाक्षरीमन्त्रं उपादिशत्।

(अनुवर्तिष्यते)



तिरुपतिस्थ श्रीगोविन्दराजस्वामिनः ज्येष्ठाभिषेकमहोत्सवः।

| दिनाङ्क | वासरः | उत्सवाः |
|---|---|---|
| १६.०७.२०२४ | भौम्यवासरः | ज्येष्ठाभिषेकः प्रारम्भः |
| १७.०७.२०२४ | सौम्यवासरः | कवच प्रतिष्ठा |
| १८.०७.२०२४ | बृहस्पतिवासरः | कवच समर्पणम् |

# कल्याण वेङ्कटेस्वरस्वामिनां साक्षात्कारवैभवोत्सवः श्रीनिवासमङ्गापुरालयविशेषाः

तेलुगुमूलम् - श्री जूलकण्टी बालसुब्रह्मण्यम्
संस्कृतानुवादः डा.के.सूर्यनारायणरेड्डि
चरवाणी - ८१०६५७८२५०



श्रीनिवासः न केवलं सप्तशैलशिखरे, शैलाधःप्रान्तेऽपि शतवर्षपूर्वमेव साक्षात्कृतः। तिरुपतिपरिसरप्रान्तेषु बहवः वेंकटेश्वरालयाः वर्तन्ते। तिरुपतितः पीलेरु मार्गे ११ किलोमीटरदूरे मङ्गापुरग्रामः वर्तते। श्रीनिवासाविभार्ववस्थानत्वात् श्रीनिवासमङ्गापुरमिति अस्य नाम आगतम्। श्रीनिवासः पद्मावतीं परिणीय तिरुमलगिरिं गच्छन् मार्गे तोण्डवाडसमीपस्थागत्स्यमुनिं ददर्श। सः मुनिः "वरेण वैवाहिकहरिद्रावस्त्रैः पर्वतः नाधिरोहणीयः इति कथयामास। तदाज्ञामनुसृत्य षण्मासपर्यन्तं श्रीनिवासः मङ्गापुरे एव आसीत्। कल्याणनदीतीरत्वात् कल्याणवेङ्कटेश्वरः इत्यपि स्वामिनं व्यवहरन्ति।

'कलौ वेङ्कटनायकः' इति प्राचीनोक्तिमनुसृत्य भारतदेशप्रजाः विशिष्य आन्ध्रकर्णाटक तमिल प्रान्तेभ्यः आगत्य तिरुमलस्थ श्रीवेङ्कटेश्वरस्वामि दर्शनभाग्यं प्राप्नुवन्ति। तमिलाः तिरुमलेशं "एलुमलैयानै" इति 'गोविन्द इति कर्णाटकभक्ताः सप्तगिरवास इति आन्ध्राः एडुकोण्डलवाडा इति घोषयन्तः प्रत्यहं सप्तगिरीशं श्रीनिवासं द्रष्टुमागत्य सेवन्ते। तिरुमल वेङ्कटेश्वरे स्वस्वविश्वासानुगुणं भक्तैः भिन्नभिन्नस्थानेषु श्रीवेङ्कटेश्वरालयाः निर्मिताः। एतेषु नारायणवन श्रीवेङ्कटेश्वर आलयः, अप्पलायगुण्ट प्रसन्नवेङ्कटेश्वरालयः, मङ्गलंपेट-प्रसन्नवेङ्कटेश्वरालयः, कोसुवारिपल्लि प्रसन्नवेङ्कटेश्वरालयः इति भक्तजनाकर्षकाः प्रसिद्धालयाः। एतेषु पौराणिक चारित्रक शासनात्मक भक्तजनप्रचारकथा साक्ष्याधारतया, तिरुमल समीपे श्रीनिवासमङ्गापुरं बहुकारणैः बहुप्रसिद्धिं प्राप।

मङ्गापुरादेव श्रीवारिमेट्टप्रापकमध्यमार्गः अपि वर्तते। मेट्टुसमीपे स्वामि पादचिह्नान्यद्यापि दृश्यन्ते। चन्द्रगिरप्रान्तप्रजाः पचनावसरशाखापत्रकायक्षीरादीन् नित्यावश्यकपदार्थान् स्वल्पसमये एव प्रापय्य स्वजीवनभृतिं सम्पादयन्ति।

अद्य श्रीनिवासमङ्गापुरनामकग्रामस्य प्राचीनकाले "सिद्धकुटीति" नामासीत्। पूर्वं तलकोनप्रदेशेष्विव तिरुमलेऽपि सिद्धाः निवसन्तिस्म। अत एव कवयः श्रीवेङ्कटेश्वरं 'गोरकुरे' गोरक्षणसिद्धः इति सम्बोधयन्ति स्म। "एतत्सिद्धकुटि" नाम ग्रामः एव श्रीनिवासपुरं श्रीनिवासमङ्गापुरमिति विख्यातिमवाप। तिरुपतिसमीपे अलमेलुमङ्गापुरख्यातिरेव एतन्नामस्थिरत्वाय हेतुर्भवति। तिरुचानूरे अलमेलुमङ्गायाः एव प्राधान्यम्। तत्र वेङ्कटेश्वरस्वामिने प्रत्येक शिलाविग्रहः नास्ति। श्रीनिवासमङ्गापुरे अलमेलुमङ्गायाः शिलाविग्रहनास्ति। उत्सवादिक्रममनुसृत्य देव्याः लोहविग्रहाः स्थापिताः। वैष्णवानां वेङ्कटेश्वरनामावल्याधिकतया श्रीनिवास पेरुमालूव्यवहारः प्रबाल्येन स्थिरीकृतः।

श्रीनिवासमङ्गापुरालयः कदा निर्मितः इत्यस्य प्रामाणिकाधारः नास्ति। हैदरालीमहम्मदीयानां दुराक्रमणमेव देवालयशैथिल्यस्य प्रबलकारणं स्यात्। तिरुमल परिसरे देवालयविनाशकारिषु हैदराली एव प्रमुखः।

अस्य आलयस्य नाम मेकंजीनां कडप कैफीयत्तौ एवं टि.टि.डि.ताम्रपत्रेषु च स्पष्टं दृश्यते। अयमालयः ताल्लपाकवंशीयैः पुनरुद्धरणभाग्यं प्राप्तः इत्यस्मिन् विषये न कोऽपि संशयः। अस्य आलयस्य समीपे कल्याणीनदीमध्ये ताल्लपाकवंशीयैः निर्मित संन्ध्यावन्दन मण्डपमप्यासीदिति तत्स्थानवृद्धवचनम्। १५१७ वर्ष काले श्रीनिवासमंगापुर वेङ्कटेश्वर स्वामिपूजाः अपि ते निर्वहन्तीस्मेति प्रमुखाधाराः अपि सन्ति। आलये भिन्नभिन्नवृत्तिसम्बन्धीनां आलयगौरव पूज्यताप्यासीदिति शासनामप्येकं दृश्यते।

शिथिलश्रीनिवासमङ्गापुरस्थ पूर्ववैभवप्राप्तेः बहुवर्षावध्यावश्यकमासीत्। एतत्पुनःप्रसिद्धेः तत्प्रान्तप्रजाः, वैष्णव्याः तायारम्मायाः, सेवैव कारणमिति वदन्ति। सा आलय परिसरप्रान्तं शुचीकुर्वन्ती स्वामिविग्रहं दृष्ट्वा परवशीभूता यथाशक्ति पूजाः करोतिस्म। एवं बहूनां आलयानां स्वरूपमूलस्थितेः प्राचुर्याय च महिलाः एव कारणमित्यमङ्गीकर्तव्यम्। तिरुवन्तपुरपद्मनाभस्वामिने नैवेद्य प्रदात्री पञ्चमजातिस्त्रीरेव। एवं दम्मक्कद्वारैव भद्राद्रि रामालयः प्रकाशं गतः। एवं लक्ष्मीद्वारैव कोरुकोण्ड नरसिंहस्वामी आराध्यः बभूव।

तायारम्मा कस्य कालस्य सम्बन्धिनीति न जानीमः। परन्तु काञ्चीपुरावासिनः कृष्णस्वामिनः स्वप्ने साक्षात्कृतः श्रीनिवासः। तदादेशानुसारं सः कृष्णस्वामी अत्र आगत्य आर्कियालजी - अधिकारिणां अनुमत्या यावज्जीवं श्रीनिवाससेवां चकार।

तदनन्तरं टि.टि.डि. कार्यनिर्वहणाधिकारिणः चन्द्रमौलिरेड्डेः अकुण्ठितप्रयत्नेन देवालययाजमान्ये अयमालयः अन्तर्गतः आसीत्। पश्चात् शिथिलालयस्य अस्य अनन्तर कार्यनिर्वहणाधिकारिणः पि.वि.आर.के.प्रसादमहोदयानां प्रयत्नैः सर्वतोभद्रतयाः नित्य, वार, पक्ष, मासायन संवत्सरोत्सवाः सम्यक् शास्त्रोक्तरीत्या निर्वाह्यन्ते। स्वामिनां पुरतः आञ्जनेय स्वाम्यालयः, आलयान्तर्भागे एव कल्याणोत्सवमण्टपश्चा निर्मितौ। अपि च श्रीनिवासमङ्गापुरे एव साक्षात्कारवैभवोत्सवनाम्ना उत्सवोऽपि निर्वाह्यते। अयमुत्सवः प्रथमतः विक्रमनामसंवत्सरे १९४० संवत्सरे आषाढशुद्धसप्तम्यां गुरुवारे उत्तरफल्गुणीनक्षत्रे निर्वाहितः। तदारभ्य अद्यापि साक्षात्कारवैभवोत्सवाः प्रचलन्ति। २६-०४-१९६२ वर्षादयमालयः टि.टि.डि. निर्वहणात् सम्यगभिवर्धते।

आलयस्यास्य बहुवैशिष्ट्यानि सन्ति। अयं स्वामी तिरुमल स्वाम्यपेक्षया अत्युन्नत विग्रहवान् भवति। जयविजयविग्रहानन्तरं आपादमस्तकस्वामिसेवार्थं विद्युद्दीपालङ्कारःनित्यमाचर्यते। प्रसिद्धसाहित्यसङ्गीत निष्णात ताल्लपाककुटुम्बिभिः दीर्घदृष्ट्या पुनरुद्धरणं प्राप्तः अयं श्रीनिवासालयः। विजयनगरसम्राज्यपालकैः अच्युतरायादिभिः धारादत्तमान्यादायान् स्वामिसेवार्थमेव ताल्लपाकवंशीयाः उपयुक्तवन्तः। ताल्लपाकचिन्नतिरुमलय्य, ताल्लपाक चिन्ननादयः आलयनिर्माणे बह्वीं श्रद्धां प्रदर्शितवन्तः। आलयप्रधानगोपुरभित्तिषु ताल्लपाकान्नमय्य पेद्दतिरुमलय्य विग्रहावद्यापि दृश्येते। अत्र अन्नमय्य सङ्गीतसङ्कीर्तनशिलाफलकानि पूर्वमासन्निति केचिद्वदन्ति। बहोकालाद्भक्ताः तिरुमल क्षेत्रे इव अत्रापि श्रीनविासमङ्गापुरे कल्याणनदीतीरे देवस्थान निर्मित कल्याणकट्टनामक क्षुरकर्मशालायां वाञ्छितार्थफलसिध्यर्थं पूर्वमेव कृतसंकल्पपूरणार्थं भक्त्या शिरोजान् समर्पयन्ति। प्रशान्तग्रामीणवातावरणे अत्युन्नतगोपुरसहितः श्रीनिवासस्य अत्युन्नतविग्रहः पौराणिकचारित्रकात्मकश्रीनिवास मङ्गापुरालयस्वामिनी नयनानन्दकरं दर्शनभाग्यं प्राप्य पुराकृतसुकृतफलात् वयं धन्याः भवेम।











## नूतन कार्यनिर्वहणाधिकारिणः (E.O.) स्वागतम् सुस्वागतम्



तिं.ति.दे. नूतन कार्यनिर्वहणाधिकारि रूपेण श्री जे.श्यामला राव ऐ.ए.एस्., महोदयः नियुक्तः सः पूर्वं आन्ध्रप्रदेश राज्यस्य उच्चशिक्षी विभागस्य प्रधान सचिवरूपेण कार्यं कृतवान्।

तिरुमल श्रीस्वामिनः मन्दिरस्य रङ्गनायकुलमण्डपे 16.6.2024 दिनाङ्के ति.ति.देवस्थानस्य कार्यकारिणी पदं स्वीकृतवान्।

पश्चात् सः पत्न्या सह श्रीस्वामिनः दर्शनं कृतवान्। अनन्तरं वैदिकविद्वांसः तेभ्यः रङ्गनायकमण्डपे वैदिक आशीर्वचनं दत्तवन्त। तदनन्तरं ति.ति.दे. सम्युक्त कार्यनिर्वहणाधिकारी श्री वि.वीरब्रह्मम्, ऐ.ए.एस्., श्रीस्वामिनः प्रसादं तथा चित्रमपि नूतन कार्यनिर्वहणाधिकारिणः दत्तवान्।





तस्मिन् एव दिने तिरुमल नारायणगिरि शालान्, वैकुण्ठं क्यू काम्प्लेक्स्, तरिगोण्ड वेङ्गमाम्बा अन्नप्रसादभवनेषु गत्वा पर्यवेक्षणमपि कृत्वा भोजनं तत्रैव कृतवान्। तत्रत्यानां भक्तानां मतं ज्ञात्वा तेषां कृते आवश्यक व्यवस्थां कर्तुं सम्बन्धिताधिकारिभ्यः निर्देशं दत्तवान्। सप्तगिरि आध्यात्मिक सचित्र मासपत्रिकायां गौरवसम्पादकरूपेण कार्यं कुर्वन्ति। तेभ्यः सप्तगिरि पक्षतः हार्दीकं अभिनन्दनं दास्यति।





श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

सुवर्णसौरभव्याख्यासमेता

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः
चरवाणी - ९९८५२३७३५३

(तदनन्तरम्)

## श्रीनिवासकल्पवृक्षः

श्लो.१४.

**प्राञ्चद्बाहु प्रांशुशाखासमग्रः हेति ज्वाला वेल्लनैः सप्रवालः।**
**मोक्षाभिख्यं सैष दद्यात् पुमर्थं शेषक्ष्माभृत्कल्पशाखी सदा नः॥**

ता - ''विविधाभरण विराजमान भुजरूप समुन्नत शाखाभिः परिपूर्णतया भासमानः, चक्रायुध ज्वालावेष्टनरूप प्रवालवान् शेषाद्रौ दीप्यमानः, श्रीनिवासाख्यः कल्पतरुः अस्माकं कृते मोक्षपुरूषार्थम् अनुगृह्णातु।''

सु.सौ.व्याख्या - भक्तजनपरिपालनार्थं शेषाद्रिम् अधितिष्ठन् वेङ्कटेश्वरस्वामी प्रार्थितार्थ परिदानदीक्षितः कल्पवृक्ष इव विराजते इति अस्मिन् श्लोके प्रस्तूयते।

प्राञ्चत्... समग्रः - वेङ्कटाचलप्रभोः चत्वारः बाहवः नानाविधैः आभरणैः अलङ्कृताः प्रकाशन्ते। भगवतो वासुदेवस्य दिव्यमङ्गलविग्रह वर्णनावसरे वामनपुराणे श्रीवेङ्कटाचलमाहात्म्य प्रस्तुति सन्दर्भे भुजसौन्दर्यम् इत्थम् अभिवर्णितम् -

''आथताश्च सुपीनाश्च सुवृत्ताश्च भुजाश्शुभाः। ३४.९
नानाप्रहरणोपेता नानाभूषणभूषिताः।
सालस्कन्धोपमाश्चापि भूषिता भूषणोत्तमैः॥ ३४.१०
श्यामाः पृथुतरा दिव्या स्तरुणादित्यतेजसः।
तरुणा स्निग्धवर्णाश्च सुखस्पर्शनखाङ्कुराः। ३४.११
शुभरेखा स्सुखताश्च समा मृदुतरास्तथा। - इत्यादि



इत्थंदिव्याभरणैः शोभमानाः शेषाद्रीशस्य भुजाः एव तदाख्यस्य कल्पवृक्षस्य समुन्नताः शाखाः। ताभिः परिपूर्णः स्वामी। अत्र समग्रत्वं च सर्वाभीष्टफलप्रदानसामर्थ्यवत्वम् इति ज्ञेयम्। यथा कल्पतरुः निजशाखाद्वारा स्वाश्रितेभ्यः तदर्थितान् कामितान् प्रददाति इति पुराणेषु विदितः तथैवासौ वृषाद्रीशः मोक्षान्तान् सर्वानपि कामितान् अनुगृह्णाति इति तात्पर्यम्। तथा चात्र अभियुक्तोक्तिः अपि एवं संवदति -

चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः। बाहु चतुष्टयवान् श्रीमन्नारायणः धर्मार्थकाममोक्षाख्यं पुरुषार्थचतुष्टयमपि अर्थिजनेभ्यः कृपया प्रददाति - इति।

किञ्चात्र 'फलमत उपपत्तेः' - ब्र.सू.३.२.३७, 'पुरुषार्थोऽतः शब्दादिति बादरायणः' ३.४.१ इति सूत्रकारोक्त वेदान्तर्थोऽपि सङ्गृहीतो भवति मोक्षप्रदानसामर्थ्यात् श्रीवेङ्कटेशाख्यकल्पवृक्षस्य अत्र सामान्यदेववृक्षात् वैलक्षण्यं सूच्यते॥

हेति.... सप्रवालः - श्रीवेङ्कटाधिपरूपः कल्पवृक्षः परितः पल्लवैः व्याप्तः। कथमिति चेत् - स्वामिनः दक्षिणहस्ते बम्भ्रम्यमाणः चक्रायुधः परितो ज्वालाभिः परिवृतः प्रकाशते। वेल्लनं शिरोवेष्टनम्। वेष्टनरूपाः ज्वलाः एव श्रीनिवासाख्य कल्पतरोः पल्लवरूपाः भासन्ते॥ मोक्षाभिख्यं पुमर्थं दद्यात् - पुनरावृत्तिरहिता वैकुण्ठाख्य भगवल्लोकप्राप्तिः मोक्षः। तादृशं परमपुरूषार्थभूतं मोक्षं भगवान् स्वयम् अनुगृह्णातु। ''मोक्षमिच्छेत् जनार्दनात्'' इत्यादि प्रकारेण श्रुतिस्मृत्यादिषु श्रीहरिकटाक्षमात्रेणैव मोक्षप्राप्तेः विधानात् स एवात्र मुक्तये प्रार्थ्यते इति भावः।

सैव - सदा सर्वस्मिन् कालेऽपि। यदा मुक्तिः प्रार्थ्यते तदैव दद्यात्। मोक्षप्राप्तेः कालनियमो नास्तीति तात्पर्यम्।

(अनुवर्तिष्यते)

# भक्तमार्कण्डेयः

- डा.जि.चन्द्रशेखर्
चरवाणी - ९४९१७९४५०६

मार्कण्डेयः मृकण्डोः पुत्रः महाशिवभक्तः।

**वंशवृक्षः -** ब्रह्ममानसपुत्रस्य भृगोः ख्यातिद्वारा लक्ष्मीरिति पुत्रिका धाता, विधातेति पुत्रौ जाताः। विधातुः पुत्रः एव मृकण्डुः। एवं मृकण्डुमरुद्वत्योः पुत्रः एव मार्कण्डेयः। मार्कण्डेयपुत्रः वेदशिशः।

**मार्कण्डेयजननम् : -** मृकण्डोः बहुकालपर्यन्तं सन्तानं नासीत्। सः शिवमुद्दिश्य तपश्चरणात् प्रत्यक्षीभूतः शिवः एवं तमपृच्छत्। षोडशवर्षपर्यन्तमेव आयुर्दायपरिमितं पुत्रं वा बहुकाल पर्यन्तं आयुर्दाय विशिष्टं पापगुणक्रूरपुत्राः वा त्वमिच्छसीति। मृकण्डुः षोडशपर्यन्तमेव आयुर्दाय विशिष्टं गुणवन्तं पुत्रं एव मम प्रदेहीति समादधौ। एवं जातः मार्कण्डेयः बाल्ये एव वेदशास्त्राण्यधीत्य स्वविनयाकृष्टं गुरूं तोषयामास।



परन्तु पितरौ अल्पायुष्कं पुत्रं स्मरन्तौ चिन्ताक्रान्तावास्ताम्। मार्कण्डेयः पितृचिन्ताकारणं स्वस्य अल्पायुष्कत्वं ज्ञातवान्। ततः वृक्षत्वग्वस्त्रधारी तीव्रं तपः आचरन्नासीत्। मरणदिनमागतम्। सः शिवलिङ्गस्य पुरतः उपविश्य ध्यान निमग्नः आसीत्। यमभटाः आगत्य तस्य शरीरोज्ज्वल तेजः असहमानाः निवृत्ताः। ततः साक्षाद्यम एव आगत्य मार्कण्डेयं पाशबद्धं कर्तुं प्रायतत। मार्कण्डेयः शिवलिङ्गं दृढं हस्ताभ्यां वहन्नासीत्। महोग्ररूपं धृत्वा शिवः विग्रहात् बहिरागत्य यमं हत्वा बालं ररक्ष। पश्चात् देवताप्रार्थनया बालं पुनरुज्जीवितं चकार। मार्कण्डेयमुद्दिश्य त्वं सदा षोडशवयस्कः एव भविष्यसीति आशीर्ददौ। मार्कण्डेयः शिववरात् दशकोटिवर्षपर्यन्तं दीर्घायुष्कः जातः। तस्य ध्याननिमग्नकाले षट्मन्वन्तराणि गतानि। सप्तममन्वन्तरे देवेन्द्रः तपोविघ्नं कर्तुं शतधा प्रयत्नं कृत्वा विफलः जातः। ततः महाविष्णुः ऋषिभिस्साकं प्रत्यक्षीभूतः। सः ध्यानाज्जागृतः विष्णुं पूजयामास। प्रळयदर्शनात् कदाचित् मार्कण्डेयः पुण्यभद्रानदी तीरतीर्थे उपविश्य ध्याने निमग्नः आसीत्। प्रलयकालवायुः विजृम्भितः। आकाशः मेघावृतः जातः। तीव्रवर्षात् नदीप्रवाहात् सर्वं जलमयमासीत्। मार्कण्डेयः नदी प्रवाहात् - एकस्य रम्भावृक्षस्य सकाशं नीतः। रम्भावृक्षस्थः एकः शिशुमार्कण्डेयं अन्तस्स्वीचकार। सः शिशु गर्भे आकाश, नक्षत्र, समुद्र, पर्वत, भूसुरासुरान् ददर्श। एवं बहुयुगाः मन्वन्तराणि च गतानि। ततः शिशुः एकस्मिन् महोच्छ्वासं चकार। तस्मादुच्छ्वासात् बहिरागतः आत्मानं जलोपरि भागस्थं ददर्श। सः शिशुस्तु रम्भावृक्षे एव आसीत्। स एव महाविष्णुरिति ज्ञात्वा मार्कण्डेयः तं परिरम्भं चकार। तत्क्षणं सः शिशुः अदृश्यो बभूव। तदा मार्कण्डेयः विष्णुप्रार्थनां चकार पार्वतीपरमेश्वरौ प्रत्यक्षीभूतौ प्रपञ्चप्रळयपर्यन्तं त्वं युवकः एव भूत्वा जीविष्यसीति आशिषं ददतुः।



# जगन्नाथरथचक्रोत्सवः

डा.एम.ईश्वरम्मा
चरवाणी - ८१०६५७८२५०

चतुर्दिव्य धामसु श्री क्षेत्रमेकम्। ओरिस्सा राष्ट्रे पूरीनगरे प्रतिवर्षे जगन्नाथरथोत्सवं भक्ताः महता संरम्भेण निर्वहन्ति। पूर्णिमादिवसेन स्नानयात्रा परिसमाप्यते। पञ्चदशदिनानन्तरं श्रीजगन्नाथसुभद्राबलभद्रमूलविग्रहान् सुदर्शनचक्रेण साकं बहिरागत्य भिन्नभिन्नेषु चतुर्रथेषु पुरे प्रधानवीथीषु परिभ्रामयन्तः वाहकाः ''गुण्डीचा''नामक मंदिरं गच्छन्ति। तत्र सप्तदिनविश्रामानन्तरं दशम्यां मूलमन्दिरं प्रति पुनर्यात्रां कुर्वन्ति ''रथे वामनं दृष्ट्वा पुनर्जन्म न विद्यते'' इति लोकोक्तिरपि वर्तते।

जगन्नाथं वामनरूपे रथासीनं पश्यन्तः भक्तजनाः जन्ममृत्युजराबन्धेभ्यः विमुक्ताः भवन्तीति विश्वासः। शरीरमध्यस्थवामनरूपात्मदर्शनात् पुनर्जन्म न भवेदिति अत्र अन्तरार्थः ज्ञेयः। अस्मिन् वर्षे आषाढमासे सप्तमदिनाङ्के द्वितीयातिथौ पूरीजगन्नाथोत्सवः प्रचलिष्यति। जगन्नाथाविर्भावरहस्यं माहात्म्यञ्चाधिकृत्य बह्व्यः कथाः प्रचारे वर्तन्ते।

नीलाचलनिवासाय नित्याय परमात्मने।
सुभद्राबलभद्राभ्यां जगन्नाथाय मङ्गलम्।।

देवकीगर्भस्थं बलरामं रोहिणीगर्भे प्रवेशयन्ती स्वयं यशोदागर्भे स्त्रीशिशुरूपेण जन्म गृहीत्वा आत्मानं देवकीसकाशं नीत्वा देवक्यां अष्टमगर्भादुत्पन्नं श्रीकृष्णं यशोदासकाशं प्रापयन्ती कंसहस्ताभ्यां गगनतलमुत्क्षिप्यमाणा भद्रासुभद्रा भद्रकाळीत्यादि द्वादशनामभिः प्रख्याता योगमायैव उपर्युक्तश्लोकोट्टङ्कितसुभद्रा। कुरुक्षेत्र युद्धानन्तरं श्रीकृष्णः एकस्मिन्दिने द्वारकायां कस्यचित् वृक्षस्य शाखाछायायां निद्रातिस्म। रक्तपद्मवर्णौ अस्य पादौ दृष्ट्वा कश्चिल्लुब्धकः पक्षीरितिभ्रमात् हननार्थं बाणसन्धानञ्चकार। तद्बाणाघातात् त्यक्तप्राणः कृष्णः गोलोकञ्जगाम। अर्जुनः श्रीकृष्णमरणवार्तां श्रुत्वा द्वारकानगरमागत्य दिव्यदेहस्य अन्तिमसंस्काराञ्चकार। श्रीकृष्णस्य मृतदेहदहनकाले नाभिप्रान्तः न दग्धः आसीत्।

तदा अर्जुनेन देववाण्येवं श्रुता। ''हे अर्जुन । इदं परब्रह्मवस्तु। एतदवशिष्टांशं समुद्रे निक्षिप । समुद्रे अयं अनन्तशयनः इति विराजिष्यते'' इति। अर्जुनः तथैव चकार। यस्य बाणात् श्रीकृष्णस्य देहत्यागः सःशबरः समुद्रे जलोपरि उन्मज्जन्तं गच्छन्तं नाभिभागमपश्यत्। तदनुसृत्य धावन् धावन् द्वारकायां पूरीक्षेत्रपर्यन्तमाजगाम। अन्ते तस्य स्वप्ने एका आदेशोक्तिः श्रुता। श्वः समुद्रतीरात् मां नीत्वा पूजय। इतः परं त्वद्वंशीयानां पूजामेवाहं ग्रहीष्यामीति। तदा प्रभृति हरिः नीलमाधवरूपे शबरेभ्यः पूजां गृह्णातीति द्वापरयुगसंघटनेयमिति वदन्ति।

कलियुगकथा - कलिङ्गदेशस्य राजा इन्द्रद्युम्नः विष्णुभक्तः विष्णुपूजोद्देशेनैव पूरीनगरे श्री क्षेत्रमिति मन्दिरं निर्ममे।

मन्दिरे निर्मितेऽपि प्रतिष्ठार्थं विग्रहः न लब्धः। राजसभायां अस्मिन् विषये चर्चासन्दर्भे श्रीकृष्णस्य देहांशः नीलमाधवरूपे कुत्रचिद्वर्तते इति राजा, शुश्राव। ततः इन्द्रद्युम्नः अन्वेषणार्थं दूतान् प्रेषयामास। दूतास्सर्वे निष्फलाः प्रतिनिवृत्ताः। परन्तु कश्चित् ब्राह्मणपुत्रः विद्यापतिः अरण्ये परिभ्रमन् शबरराजस्य सुतायाः ललितायाः दृष्टिपथे पतितः विवाहार्थं तया याचितः अङ्गीचकार। एवं तयोर्दाम्पत्य जीवितं सुखं चलतिस्म। पत्न्याः ललितायाः मुखात् तत्पिता अरण्ये प्रत्यहं गुप्तस्थाने नीलमाधवपूजां करोतीति ज्ञातः। पतिः विद्यापतिः तत्प्रान्तदर्शनार्थं अङ्गीकृतभार्यापित्रा आच्छादितनयनः मार्गज्ञानार्थं ''सर्षप'' धान्यानि विकिरन् नीलमाधवमन्दिरं ददर्श। तत्र पूजासमये देववाणी एव श्रुता। इतः परमहं इन्द्रद्युम्न राजपूजां एवं स्वीकरिष्यामीति।'' शबरराजः अहं दैवपूजाविदूरः भविष्यामीति चिन्ताक्रान्तः बभूव। ततः विद्यापतिः भार्यानुमत्या इन्द्रद्युम्नसकाशं गत्वा नीलमाधवस्थानं प्रोवाच। राजा सपरिवारः ''सर्षप'' धान्यमार्गे गच्छन् अन्विष्यन् नीलमाधवस्थानं न ददर्श। तदा दैववाणी एवं श्रुता :- ''नीलमाधवः समुद्रजले दारु ब्रह्मरूपे आगच्छतीति समुद्रजलात् तद्दारु बहिरानीय विग्रहाः निर्मीयन्तामिति। महासैन्यगजादिभिरप्यकृष्टं दारु न बहिरागतम्। तदा शबरराजः एकस्मिन् पार्श्वे, विद्यापतिः अन्यस्मिन् पार्श्वे हस्ताभ्यां गृहीत्वा तद्दारु बहिरानीतवन्तौ। जगन्नाथस्य शूद्रब्राह्मणभेदः नास्तीत्यनेन ज्ञायते।

पश्चात् बहुशिल्पिनः अपि दारु विग्रहरूपं कर्तुं अशक्ताः आसन्। ततः राज्ञः प्रार्थनया जगन्नाथादेशानुसारं देवशिल्पी विश्वकर्मा विग्रहनिर्माणं कर्तुं प्रारेभे। विग्रहनिर्माणकाले एकविंशतिदिनपर्यन्तं येन केनापि शिल्पनिर्माणशाला न द्रष्टव्येति शिल्पी नियममेकं सर्वेभ्यः, प्रोवाच। परन्तु इन्द्रद्युम्नस्य पत्नी ''गुडीचादेवी'' विग्रहनिर्माणद्वारं जिज्ञासया उद्घाटितवती। पश्चात् शिल्पिनः विग्रहनिर्माण शब्दः न शृतः। राजपत्नी झटित्येव राजानं भर्तारं समीप्य स्वकृतमपराधं प्रोवाच । राजा विग्रहनिर्माणशालां जगाम। तत्र शिल्पी न दृष्टः। तदा राजा केवलं असम्पूर्णदारुविग्रहत्रयमपश्यत्। राजा पश्चात्तप्तः देववाण्यमेवं शुश्राव। इयं दैवेच्छा। एवमेव असम्पूर्णविग्रहपूजैव प्रवर्तनीयेति जगन्नाथसंकल्पः इति। अद्यापि एवमेव जगन्नाथ बलभद्रासुभद्राः रथोपविष्टाः विग्रहरूपे पूजां गृह्णन्ति।

पूरीजगन्नाथविषये अन्या काचित्कथा ---

कदाचित् पूरीक्षेत्रपुरोहितः जैपूर्पालकं द्रष्टुमागतः भगवत्प्रसादमानीतं राज्ञः, राज्ञ्याश्च ददौ। राजसुता विष्णुप्रिया लेखमेकं लिखित्वा जगन्नाथाय समर्पय इति निर्गच्छते पुरोहिताय दत्वा रत्नपेटिकायां तल्लेखं निक्षिप्य स्वर्णमुद्रिकाः अपि बहुमानरूपेण पेटिकायामेव निक्षिप्य तस्मै, दत्तवती। स्वस्थानं पूरीनगरं गच्छन् पुरोहितः मार्गमध्ये पेटिकायां किमस्तीति पेटिकां उद्घाटयामास। तत्र केवलं पत्रलेखं दृष्ट्वा निराशः तत्पत्रं खण्डशः चकार। ततः जगन्नाथः स्वप्ने दृष्टः पुरोहितमुद्दिश्य बहुमानार्थं राजपुत्रिकया धने दत्तेऽपि त्वं तया प्रेषितं पत्रं विच्छिन्नं कृतवानसि। राजपुत्रिकया प्रेषितः लेखः अमूल्यः इति मन्दिरं गत्वा पश्य इत्यवोचत्। पुरोहितः जगन्नाथस्य वक्षःस्थले हारलग्नलेखमपश्यत्। पश्चात् भक्तैः पृष्टः स्वकृतमपराधं उक्त्वा पश्चात्तप्तः आसीत्। तस्मिन्पत्रे श्लोकः एवं वर्तते-

**रत्नाकरस्तव गृहं गृहिणी च लक्ष्मीः**
**किं देयमस्ति भवते पुरुषोत्तमाय।**
**आभीरगोपीललनाहृतमानसाय दत्तं**
**मनस्तदनु मे कृपया गृहाण।।**

एवं प्रार्थयन्ती राजपुत्री स्वमनः भगवते कृष्णाय जगन्नाथाय समर्पितवती।

**महाम्भोधेस्तीरे कनकरुचिरे नीलशिखरे**
**वसन् प्रासादान्तस्सहजबलभद्रेण बलिना।**
**सुभद्रामध्यस्थः सकलसुरसेवावसरदो**
**जगन्नाथस्वामी नयनपथगामी भवतु मे।।**

''पूरीजगन्नाथाय नमः''

नीतिकथा



# धेनोः व्याघ्रः पलायते

शिबिरस्य प्रथमदिने एव भोजनादिकं समाप्य मध्याह्ने बालैः सह पत्रक्रीडायां मग्नः आसम् अहम्। तदा सद्यः एव परिचितः प्रोफेसर- सर्कसवाले(सर्कस-क्रीडारङ्गस्य स्वामी) मामेव अन्विष्यन् तत्र समागतः। ''कॅप्टनसाहेब, शृणोतु कॅप्टनसाहेब! अस्माकं सर्कसक्रीडायां कतिपयेभ्यः मासेभ्यः लोकप्रियः सहभोजनकार्यक्रम प्रचलति। गौः, भल्लूकः व्याघ्रश्च इत्येतेषां पशूनाम् अयं कार्यक्रमः प्रयोगस्य सर्वोच्चम् आकर्षणम् अस्ति। तथा विज्ञापनं कृत्वा प्रवेशपत्राणि अपि विक्रीतानि। परन्तु व्याघ्रभल्लूकयोः कलहकारणात् द्वावपि व्रणितौ।'' ''किं प्राणिनोः कलहः?'' ''महाशय, अस्माकं सर्कसक्रीडायां तु व्याघ्रभल्लूकौ द्विपादौ एव।'' एवं प्राध्यापकमहाशयेन रहस्यभेदः कृतः। ''नास्ति अस्माकं सामर्थ्यं व्याघ्रं वा भल्लूकं वा पालयितुम्। क्रीडायां द्वौ बहुरूपधारिणौ नरौ एव व्याघ्रं भल्लूकं च नाटयतः।'' ''किं धेनुरपि...?'' ''नहि नहि, धेनुस्तु वास्तविकी एव।'' ''हंऽऽ... कथयतु तर्हि मया करणीयम् अत्र?'' अहं प्रार्थये यत् भवतः बालवीरचमूतः कौ अपि द्वौ सैनिकौ अद्यतनक्रीडायां यदि व्याघ्रभल्लूकवेषौ धृत्वा प्रेक्षकाणां मनोरञ्जनं कुर्यातां तर्हि महान् उपकारः स्यात्। कृपया साहाय्यं करोतु।'' विवशता मया अवगता। यदृच्छया प्राप्तः अयं सर्कसस्वामिनः परोपकारस्य अवसरः इति मत्वा तस्य साहाय्यं करणीयमिति मया निश्चितम्। भल्लूकवेषे अब्दुलः शोभेत इति मत्वा सः भल्लूकपात्रे नियोजितः। व्याघ्रस्य अभिनयार्थम् अहं स्वयमेव सिद्धः। एवं पात्रयोजना निर्धारिता।

कार्यक्रमात् प्रागेव अहं तथा अब्दुलः व्याघ्रभल्लूकवेषौ धृत्वा स्वपञ्जरयोः समुपस्थितौ। मम पञ्जरस्य पुरतः एव अधिकः सम्मर्दः जातः। यावच्छक्यम् अहं जनान् रञ्जयितुं प्रयत्तवान् किन्तु जनाः न सन्तुष्टाः। ''किमयं व्याघ्रः? कृशोऽयम्'' इति उपहासेन अवदन्। तदा एव एका महिला स्वपुत्रेण सह व्याघ्रं द्रष्टुम् आगता। मम गर्जनां श्रुत्वा बालः भीतः अतः सा माता मयि पाषाणखण्डान् अक्षिपत्। तदा वेदनया बाधितः अहं क्षणं यावत् व्याघ्रः न वदति इति विस्मृत्य अवदम्,

''दृष्ट्वा पञ्जरस्थितान् व्याघ्रान्, महिलाः क्षिपन्ति पाषाणखण्डान्।''

मम वाक्यसमाप्तेः पूर्वमेव व्याघ्रस्य मनुष्यवाण्या भाषणेन मूर्च्छिता सा महिला 'भूतोऽयं' भूत इति उच्चैः आक्रोशन्ती भूमौ पतिता। मम पुत्रः राघुः अपि एकवारं पञ्जरसमीपम् आगत्य, ''आप्पा! चायं पातुम् इच्छति किम् इति यदा प्रष्टवान् तदा प्रेक्षकाः सम्भ्रान्ताः एव। व्याघ्रः न वदति इति विस्मृत्य अवदम्,

रात्रौ दशवादने सर्कसक्रीडायाः प्रारम्भः जातः। द्वादशवादने क्रीडायाः चरमबिन्दुः समायातः - सहभोजनम्। प्रेक्षकाणाम् उत्कण्ठायाः पराकाष्ठा जाता। सेवकः मञ्चे त्रीणि आसनानि स्थापितवान् मध्यभागे च वर्तुलाकारं पीठम्। अहम् एकस्मिन् आसने उपावेशितः। अत्रान्तरे भल्लूकवेषधारी अब्दुलः तत्र प्राप्तः। गौः अपि मञ्चं समागता। ततः अस्माकं पुरतः खाद्यस्य योजना कृता। सहभोजनस्य प्रारम्भे जाते उत्तेजितैः प्रेक्षकैः आनन्देन तालिकावादनम् आरब्धम्। पूर्वमपि व्याघ्रभल्लूकौ मानुषौ एव। तथापि सा धेनुः ताभ्यां सह कार्यक्रमं कर्तुम् अभ्यस्ता आसीत्। अचिरादेव न इमौ परिचितौ व्याघ्रभल्लूकौ इति धेन्वा लक्षितम्। सम्भ्रमेण संशयेन च एकैकशः आवां दृष्टवती। यदा च तस्याः प्रत्ययः जातः तदा शृङ्गे उन्नम्य नौ आक्रामत्। अहमपि गर्जनां कृत्वा तीक्ष्णदन्तान् दर्शितवान्। किन्तु न किञ्चिदपि भयं तस्याः। अब्दुलः तां हस्तेन ताडितवान्। तेन क्षुब्धा सा तम् अन्वधावत्। भल्लूकः तदा चापल्येन पटमण्डपस्तम्भम् आरूढवान्। इयं सर्वा क्रीडा पूर्वनियोजिता इति विचिन्त्य प्रेक्षकाः अपि प्रमुदिताः। भल्लूकः निर्गतः इति क्रुद्धा सा धेनुः अधुना व्याघ्रं मां लक्ष्यं कृतवती।

भीत्या अहं चतुष्पादविशिष्टं व्याघ्रत्वं विस्मृत्य द्विपादं मूलस्वरूपमाश्रितवान्। 'प्राध्यापकमहाशय, परित्रायतां, परित्रायताम्' इति करुणं विलपन् अधावम्। तदा धेनोः भीतं, पलायमानं व्याघ्रं दृष्ट्वा प्रेक्षकाः कोलाहलं कृतवन्तः। अनन्तरं मम व्याघ्रवेषं निष्कास्य मां निर्घृणं ताडितवन्तः। वेदनाभिः अहं मूर्च्छितः। यदा च जागरितः तदा अस्माकं शकटः पुनः पुण्यपत्तनदिशं प्रस्थितः आसीत्। मम उत्तमाङ्गम् अन्यानि च अनुत्तमानि अङ्गानि उपचारपट्टिकाभिः विभूषितानि आसन्।



# दैवदूषणं महापापम्

तेलुगुमूलम् - श्रीमती वालिलाल नागवल्ली
चित्राणि - श्री के.द्वारकानाथः
संस्कृतानुवादः - श्री का. भास्करः
चरवाणी - ८१४३१५०८३३

1 शिशुपालः दमघोषक, सात्वत्योः कुमारः। अस्य श्रीकृष्णेन सह वैरं जातम्। अनन्तरं कृष्णः इमं चक्रायुधेन मारितवान् सा कथा किम् इति पश्यामः।


















13 धर्मराजः राजसूययागं योजयित्वा यागफलस्य प्रदानं श्रीकृष्णाय दातुमिच्छति।

14 कृष्ण! परन्धाम!राजसूययागस्य फलं त्वमेव स्वीकुरु।

15 तथैव! ददातु धर्मज!

16 तत् दृष्ट्वा शिशिपालः क्रुद्धोजातः।

17 हे धर्मज! यागफलस्य स्वीकरण अर्हता तस्य नास्ति। तस्य मा ददातु। अहं न अङ्गीकरोमि। सः महामायावी।

18 तथा बहूनि निन्दा वाक्यानि अभणत् शिशुपालः बहुविधैः दूषयति।

19 शिशुपाल! तव शतदोष परिहारार्थं मम चक्रायुधेन तव मरणं दास्यामि।

20 तत् श्रुत्व भीष्मः उक्तवान्। शिशुपाल! त्वं दैवं दूषयति। उचितं नास्ति तव।

21 हे! भीष्म त्वं तूष्णी तिष्ठ। गोपालस्य फलं न दातव्यम्।

22 शीघ्रं गच्छ चक्र! तस्य शिरसः खण्डनं कुरु।

23 तथैव स्वामिन्।

24 कृष्ण! दुष्टसंहरणं कृत्वा लोकोपकारः कृतवान्। इदानीं यागफलं स्वीकृत्य अस्मान् आशास्स्व।

25 तथैव धर्मज।

26 धन्योऽस्मि स्वामिन्! धन्यः!

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

बा
ल
वि
नो
दि
नी

१. गुरुपौर्णमी, २. गुरुशिष्य सम्बन्धः, ३.आषाढमासः, ४.शयनएकादशी।

उचित समाधान सङ्ख्यां कोशे लिखन्तु।

मेलनं वा निष्कासनं कृत्वा ५ सङ्ख्या यत्र आगच्छति तस्मिन् मार्गे गच्छति चेत् शिष्यः गुरोः समीपं गन्तुं शक्नोति।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 7 −2 | 8 −3 | 6 −4 | 5 +0 | 12 +4 | 8 −2 | 5 +10 | 7 −6 |
| 10 −2 | 2 +3 | 8 −3 | 8 −2 | 13 +5 | 7 −5 | 12 +2 | 9 −2 |
| 16 +4 | 5 −2 | 9 −4 | 10 −5 | 15 −10 | 1 +4 | 12 −7 | 9 −2 |
| 15 +2 | 7 −2 | 18 +3 | 3 +2 | 4 +1 | 19 +1 | 19 −14 | 0 +5 |

बालकस्य हस्ते सुधाखण्डं नास्ति।

अस्मिन् चित्रे दोषः कुत्र वर्तते?

अ आ
इ ई

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.













13.06.2024 दिनाङ्के तिरुचानूरु श्रीपद्मावती देव्याः दर्शनार्थं सकुटुम्ब सहितेन आगत आन्ध्रप्रदेश राज्य मुख्यमन्त्रिवर्यः मान्य नारा चन्द्रबाबुनायुडु महोदयः अपिच लोकेश् मानव संसाधन एवं विकासः तथा आई.टी. तथा आर्.टी.जी., महोदयः। अस्मिन् सन्दर्भे ति.ति.दे. सहायक कार्यनिर्वहणाधिकारी श्री वी.वीरब्रह्मम् ऐ.ए.एस्., महोदयः तीर्थ प्रसाद वितरणं कृतवान् अपिच वेदपण्डिताः वेदाशीर्वचनं दत्तवन्तः।



SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS PRINTING ON 25-06-2024 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2024-2026" LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2024-2026" Posting on 5th of every month.

व्यासाय विष्णुरूपाय व्यासरूपाय विष्णवे।
नमो वै ब्रह्मनिधये वासिष्ठाय नमो नमः।।

# व्यासपूर्णिमा

21-07-2024